

राजप्रसादे रामकियन (रामकीर्ति, थाइरामायण) भित्तिचित्रम्

रामायणादेव कथा अनेका आदाय यद्भित्तिषु निर्मितानि ।
परश्शतानि प्रथितानि चित्राण्याभां विचित्रां विकिरन्ति यत्र ॥ श्लोकः २०

# थाइदेशविलासम्

प्रणेता
**सत्यव्रतशास्त्री**
दिल्लीविश्वविद्यालये पण्डित मनमोहननाथदर-
संस्कृतपीठाचार्यः कलासङ्कायाध्यक्षपूर्वश्च
सम्प्रति—थाइदेशे बैंकाकनगरे चुलालौङ्कौर्नविश्वविद्यालये
भारतीयविद्याध्ययनपीठाभ्यागताचार्यः

थाइभाषान्तरकर्तारौ
महाचक्री महाप्रतापिनी देवरत्नराजसुता
**सिरिन्धर**
थाइदेशमहाराजकुमारी

अथ च
**प्रवचन ग्रश्वविरुद्धहकार**
चुलालौङ्कौर्नविश्वविद्यालये प्राच्यभाषाविभागीयः

भूमिकोपनिबद्धा
**विसुधबुस्यकुलः**
चुलालौङ्कौर्नविश्वविद्यालये प्राच्यभाषाविभागाध्यक्षः

**ईस्टर्न बुक लिंकर्स**
दिल्ली

# THĀIDEŚAVILĀSAM

**Satya Vrat Shastri**
Pandit Manmohan Nath Dar Professor of Sanskrit
and Ex-Dean, Faculty of Arts,
University of Delhi.
*Now on Deputation* :
Visiting Professor of Indian Studies,
Chulalongkorn University,
Bangkok, Thailand

*Thai Translation* :

Her Royal Highness Mahachakri Devaratanarajasuda
**Sirindhorn**
Princess of Thailand

**Prapod Assavavirulhakarn**
Department of Eastern Languages, Chulalongkorn University,
Bangkok, Thailand

*Introduction* :

**Visudh Busyakul**
Head of the Department of Eastern Languages,
Chulalongkorn University,
Bangkok, Thailand

EASTERN BOOK LINKERS
DELHI (INDIA)

# INTRODUCTION

It is indeed an honour that I have an opportunity to write the introduction to the Thai-deśa-Vilāsam, a Khaṇḍa-kāvya which flowed from the pen of such an eminent scholar like Sri Satya Vrat Shastri, at present a Visiting Professor of Indian Studies in the Faculty of Arts of Chulalongkorn University, Thailand.

Not only that Dr. Satya Vrat Shastri is a full-fledged Sanskrit scholar, who has strictly kept up the tradition of a family which has always been connected with Sanskrit, but he is also a poet in his own right. To the best of my knowledge, Dr. Satya Vrat Shastri first showed the signs of being a true Sanskrit poet when he was in his early teens, a feat to be proud of by anyone.

The work of Dr. Satya Vrat Shastri here is the work of a true poet, who has an alert mind, sharp eyes and keen ears to whatever he has come across. As the name implies, *Thai-deśa-Vilāsam* is a poetic description of Thailand. Dr. Shastri had not been in Thailand long when he started on this literary pastime. The poems cover the main *patriotic* themes of the Thai people : the nation and its culture, the religion, and the king. The description of the land is primarily limited to the central part of the country, but mention is made of places in the south, and a lengthy and worthwhile description of Chiengmai of the north is also given. History and legends are also given in connection with places of interest. For instance see description of Thonburi (62 ff.), Queen Suriyothai (83 ff.) Bang Pa-in (92 ff.).

A number of couplets is devoted to the description of the King and the royal household. It is remarkable that Thailand never had the famous saying : "L,etat, c'est moi", but what we can say is that in our history, the kings are the main pivot to which every major developmen t in the land is attached.

There is no need to reiterate that Thailand is the place where two great cultural streams of the world meet. The Thai people, judged from the physical features, language structure and prevalent traditional traits, are doubtless closely related to the Chinese. On the other hand, Thailand's close affinity culturally with India is unmistakable, as seen from Buddhism, the national religion of the country, and the intellectual quests of the people of the land. Sanskrit words borrowed and accepted in Thai are numerous.[1] Dr. Satya Vrat Shastri is a Sanskritist, it is therefore no wonder that he could appreciate the Thai culture in a relatively short time.

It is no exaggeration to assert that the blend of Hinduism and Buddhism is complete in Thailand. The yellow-robed Buddhist monks are everywhere revered, yet at the same time the masses in remote areas still hold on to the belief in the primitive Faith of the Ātharvaṇic type of religion, especially the sympathetic magic. It must also be admitted that even in the heart of Bangkok, the worship of Brahmā at a corner of a prominent hotel cannot escape the tourists' attraction.[1]

The *Thai-deśa-Vilāsa* is a beautiful poem, valuable as a work of art, useful as an introduction to Thailand for foreigners. Professor Satya Vrat Shastri has proved himself not only

1. Some of the Sanskrit compounds coined in Thailand have been accepted in India, e.g. *dūra-darśana* and *dūra-lekha*. (See Raghuvira : Dictionary of Indian Technological terms, s.v. *Television* and *Telegraph*.

 Certain terms are independently adopted in India and Thailand, with a different shade of meaning. *Mahāvidyālaya* was adopted in Thailand more than 60 years ago as an equivalent of the English *University*, whereas the same word *mahāvidyālaya* was adopted in India to be the equivalent of *College* only after the Independence.

1. Theoretically, Brahmā worship at the corner of the compound of Erawan Hotel represents an "upgraded version" of the worship of the divinity of the household compound. Those who are familiar with the Thai pronunciation pattern can easily understand the shift from *phūm* (Skt. *bhūmi*) to *phrom* (Skt. *brahmā*).

 The authorities have no objection to such worship at the Erawan Hotel. The money collected by the Hotel each year from the worshippers is substantial, and the amount is then allocated as donations to various hospitals in the country.

as a Sanskritist, not only as a poet, not only as a Visiting Professor of Indian Studies in the land of Śyāmadeśa in Suvarṇabhūmi, but also as the goodwill ambassador from Thailand to India. As a lover of Sanskrit, I admire him for the lovely work, and as a Thai national, I thank Professor Satya Vrat Shastri with all my heart for what he has done for Thailand.

**Visudh Busyakul**
Professor of Sanskrit,
Faculty of Arts,
Chulalongkorn University,
Bangkok, Thailand.

# निवेदना

एशियाख्यस्य महाद्वीपस्याग्नेयभागः सुतरां भारतसंस्कृतिसुवासित इत्ययं चिराय ममाकर्षकोऽभूत् । इमं द्रष्टुमहमासमुत्कः, अत्रत्यानां लोकानां व्यवहार-पद्धतिः संस्कृतिश्च वैलक्षण्यं किमप्याधत्त इति । १९७७ तमे ख्रिस्ताब्देऽक्तूबर-मासि बैंकाकस्थे चुलालौङ्कौर्नविश्वविद्यालये भारतीय-सांस्कृतिक-सम्बन्ध-परिषदा भारतीय-विद्याध्ययनपीठाभ्यागताचार्यरूपेणाहं नियुक्त इति तद्दर्शना-वसरमवापम् । सम्प्रत्यहमेशियाख्यमहाद्वीपमध्यभागे कृतवसतिः । इतो नातिदूरेऽवस्थितांस्तद्भागानन्यदेशानपि कालेन दृशिकर्मीकरिष्यामीति प्रत्येमि । तेन भवेदेतद्भागसंस्कृतेरपि मम साक्षात्परिचयः । संस्कृतिरियं देशान्तरेभ्यो यदुत्कृष्टं तद् गृहीत्वाऽपि स्वस्मिन् रूढा एवावस्थिता, अन्यदीयं यत्तदात्मसा-त्कुर्वत्यपि नात्मानं परिहृतवती, असाधारणेयं शक्तितरङ्गैरुपबृंहिता च । अधुनाऽहं थाइदेशे स्थितिं कलयामि । निजीयापरवशश्चैतदीयं दृश्यजातं निभालयामि, एतदीयानि श्यामायमानानि धान्यक्षेत्राण्यक्षिलक्षीकरोमि, सुदूरं विस्तृता एतदीया ग्रामभूमीः पश्यामि, पुरातनान्येतदीयानि स्थानानि चक्षु-र्विषयतां गमयामि, प्रत्नां च नूत्नां च बैंकाकाख्यामेतदीयां राजधानीं नयना-तिथितां नयामि । एतावता चालं तुष्यामि ।

थाइदेशेन समं ममाऽभिसम्बन्धो न बैंकाकपुरे नियुक्तिसमकाल एव । तन्निमित्तानि तु ततः प्राक्तरामेवावर्तन्त । तेष्वेकं भारते थाइदेशराजदूतो महामहिमा डा० सुख्राति चूडस्मित एव येनाहं सुहृदित्यङ्गीकृतः । दिल्ल्यां कदाचित्कस्मिंश्चिदुत्सवे द्वावप्यावामुपस्थितौ । तत्र दैवादभूदावयोस्सङ्गमः । स च कालेन तथा परिणतो यथाऽत्रयोर्हृदयमपि परस्परेण सङ्गतम् । अपरञ्च निमित्तमवर्तन्त दिल्लीविश्वविद्यालयेऽधीयाना थाइच्छात्राः । ते हि सायाह्नेषु मद्गृहानुपेत्य सम्भाषणसुखार्थं मयि कञ्चित्कालमतिष्ठन् थाइदेशविषये च मां बहु पर्यचाययन्, थाइभाषामपि च मां शिक्षयितुं प्रायसन् । तदनु सम्प्राप्तः स सुदिवसो यदाऽहं थाइदेशमुपेतः तदादिर्ममैतेन सह साक्षात् सम्बन्धः ।

बाल्यादेव काव्यरचनायां ममास्ति काप्यभिरुचिः । तत्राहं कमप्यमन्द-मानन्दमनुभवामि । रचितानि मया नाना महाकाव्यानि, खण्डकाव्यानि च । तेष्वेकमपहाय यदर्थमहं विशिष्य नियोजितः, सर्वाणीतराणि स्वान्तसुखायैव कृतानि । तानि सर्वाण्यप्यद्य प्राकाश्यं गमितानि, मत्सदृशा ग्रन्थेपि तत्सुखम-श्नुवीरन्निति । थाइदेशविलासकाव्यमपि मया स्वान्तसुखायैव व्यरचि । एतत् प्रकाशने च स एव नाम हेतुर्योऽन्येषाम् । श्रूयते थाइदेशविषयिणीदम्प्रथमेयं कृतिरिति । असंशयमेव तत्सुखाकरोति मे चेतः ।

थाइभारतदेशयोर्भाषादृष्ट्या संस्कृतिदृष्ट्या चातिनेदीयान् सम्बन्धः परश्शतानि वर्षाणि प्रवर्तमानः । नैकाः सामाजिक्यो धार्मिक्यश्च परम्परा उभयोरपि साधारण्यः । संस्कृत्योः समन्वयस्यैवैष प्रभावो यत्थाइभाषायामस्ति विपुलः संस्कृतशब्दराशिः । नाना संस्कृताभिलेखाश्चत्वारिंशद्वा ततो वाऽधिका थाइदेशे समुपलब्धाः । तेषु प्राचीनतमः खिस्तपष्ठशताब्दीकालिकः । नाना पुराणां पुरीणां वा नामानि संस्कृतनिष्ठान्येव । इयमेव दशा लोकनाम्नामपि । उभयोरपि थाइभारतदेशयोस्तादृशः संवादो यथा कृतेरेतादृक्षायाः प्रकाशनं बहोः कालात्पूर्वमेवोचितमासीत् ।

संस्कृतभाषयोपनिबद्धो भूयान् भारतीयो ग्रन्थराशिर्वैलक्षण्यं किमप्यात्मन्या-दधाति यन्नाम न सुकरमुन्नेतुम् । अतीतानि सहस्राणि हायनानि संस्कृतवाचः प्रयोगमवतरन्त्याः । तथाऽप्येतद्वाङ्मयं तथाऽर्वाक्तनं यथाऽर्वाक्तनं वाङ्मया-न्तरम् । भूयांसो ग्रन्था एनयानुदिनं विरच्यन्ते, ग्रन्थकोषं चैतदीयं समेधयन्ति । परोलक्षा एतदुपासका एनया व्यवहरन्ति । थाइदेशविलासकाव्यं प्राधान्येन तानेव स्पृशति । एतेन थाइदेशः संस्कृतवाङ्मयस्याङ्गतामुपैति । संस्कृतं नाम दैवी वागाद्रियते च श्लाघ्यते च पूज्यते च । थाइशब्दानां संस्कृतकृतिषु, विशेषतः संस्कृतकाव्येषु समावेशो न सुकरः । मया पुनरत्र प्रयत्तम् । प्रयत्नो मे फलेग्रहिर्न वेति सुधिय एवात्र मानम् । यथासम्भवं संस्कृतमूलकानामपि थाइशब्दानां थाय्युच्चारणमेव मया गृहीतं तथैव च ते यथावसरं प्रयुक्ताः । तन्मूलसंस्कृतरूपप्रत्यापादनेऽधुनातनानां संस्कृतज्ञानामभिनिवेशो मया सुदूरं परिहृतः । तेन चुलालौङ्कौर्नशब्दस्तद्रूपेणैव प्रयुक्तो न तु चूडालङ्करणरूपं ग्राहितः । तथैवैकाथसरोदिति रामाधिबँदीति शब्दावपि नैवैकादशरथरामाधि-पतीति संस्कृतरूपे लम्भितौ । तथा सति तयोः थाइस्वरूपं प्रहीयेत । शब्दानां तदुच्चारणस्य चाङ्गाङ्गिभावः सम्बन्धः । शब्दा यथोच्चारणमेव लेखितव्या इति मे मतिः । अत्र केवलमपवादः साम्प्रतिकस्य राज्ञो नामन्येव कृतः । पद्यस्वार-स्यवशादेव तद[illegible] भूमिबल इति रूपेण विन्यस्तः ।

वैविध्यार्थमेव स्थाने स्थाने कृतो वृत्तभेदः । इन्द्रवज्रोपेन्द्रवज्रोपजातयः परस्परेण भूयः संवदन्तीति सम्मिश्रित एव तत्प्रयोगः । तदपहाय यावत्किञ्चित्प्रकरणं न समाप्तिमेति, न तावत्तत्र वृत्तान्तरप्रयोग इति काचन पद्धतिरत्र काव्ये समाश्रिता । इन्द्रवज्रोपेन्द्रवज्रोपजात्यनुष्टुब्भुजङ्गप्रयातवसन्ततिलका-द्रुतविलम्बितार्याविद्युन्मालेति नव वृत्तानि काव्येऽत्र प्रयुक्तानि । तेष्विन्द्रवज्रो-पेन्द्रवज्रोपजात्यनुष्टुब्भुजङ्गप्रयातवसन्ततिलकविद्युन्मालेति सप्तैषदुच्चारण-भेदेनेन्द्रवोङ्, उपेन्द्रवोङ्, उपछात्, पथ्यावत्, फूछोङ्गप्रयात्, वसन्ततिलोक् विच्छुम्मलेति नामभिः थाइकाव्येष्वद्यापि प्रयुज्यन्ते ।

यदत्रेतिवृत्तं काव्ये वर्णितं तदाचार्य रौङ् श्यामानन्दकृतथाइदेशेतिहास इति ग्रन्थमाश्रित्यैव । इतिहासदृष्ट्या समीचीन एवायं ग्रन्थ इति मे मतिः ।

सौकर्यार्थमाङ्गल्या थाइभाषया चापि काव्यस्यास्य कृतोऽनुवादः । आङ्गल्या मयैवायं प्रणीतः, थाइभाषया पुनः थाइदेशमहाराजकुमार्या महा-चक्रीत्युपाधिजुषा महाप्रतापिन्या । सिरिन्धर इत्यनया । साहाय्यमत्र विरचितं चुलालौङ्कौर्नविश्वविद्यालयप्राच्यभाषाविभागस्थेन श्री प्रबोध अस्सवविरुल्ह-कर्नेन । उभयोरप्यहमधमर्णोऽस्मि, विशेषतस्तु महाराजकुमार्या यया काव्य-रचनोपक्रमकाल एव थाइभाषयानुवदिष्याम्येतदिति प्रतिज्ञातं तत्पूर्त्यर्थं च सुतरां वर्धितो ममोत्साहः । सत्यपि च गुरुतरे कार्यभरे निर्व्यूढाऽनया प्रतिज्ञेति कैः शब्दैरिमामभिष्टुयाम् । चुलालौङ्कौर्नविश्वविद्यालयप्राच्यभाषाविभागस्था मम सहकर्मिण आचार्य विसुधबुस्यकुल डा० प्राणीलपनिच कुमारी तसनीसिसकुलाः काले काले काव्ये भूयसीं रुचिं प्रदर्श्य तदर्थं मां प्रेरितवन्त इति तेषामप्यह-मस्मि सुतरां कृतज्ञः । भूमिकोपनिबन्धनेन मे भूय उपकृतवन्तम् आचार्य-विसुधबुस्यकुलमप्यहममायं हृदयेन सत्करोमि । प्रूफसंशोधने साहाय्यमाचरित-वन्तम् आचार्यजगदीशलालशास्त्रिणं काव्यप्रकाशनमङ्गीकृतवन्तम् ईस्टर्न बुकलिंकर्सेत्याख्यायाः पुस्तकप्रकाशनसंस्थाया अध्यक्षं श्रीश्यामलालं चापि धन्यौ वदामि ।

राष्ट्राणां परस्परेण सम्बन्धा भवन्ति कुसुमसुकुमारा नाम । अजस्रमवधानं परिपोषणं च तदर्थं सुतरामपेक्ष्येते । ते चेन्मदीयेनैतेन काव्येन कलयाऽपि समेधेरन्प्रयत्नमात्मनः फलेग्रहि कलयेयेत्येतावदेवोक्त्वा पर्यवसाययामि वाचमहं—

बैंकाकनगरम्
१२.१.१९७९

विदुषामाश्रवः
सुरसरस्वतीसमाराधनैकव्रतः
**सत्यव्रतः शास्त्री ॥**

## PREFACE

Southeast Asia as a bastion of Indian culture had always had a particular fascination for me. I wanted to see for myself this beautiful region with its variegated social and cultural pattern. The opportunity came with my appointment as a Visiting Professor of Indian Studies in the Chulalongkorn University, Bangkok under the aegis of the Indian Council for Cultural Relations in October 1977. I am now in the heart of Southeast Asia and can hope to look over my shoulders to other countries of the region to form an integrated view of what goes by the name of Southeast Asian culture, the culture that is receptive and vibrant, that is incorporative and indigenous, that has maintained its distinctive character while accepting much that is good from abroad, that is unique in its growth and development. For the present I am in Thailand looking wonderously at its charming landscape, its lush green rice fields, its sprawling countryside, its ancient monuments, its old and yet modern capital city of Bangkok. I have fallen in love with it. And there the matter rests as far as I am concerned.

It is not as though the link with Thailand developed all of a sudden just with my appointment. Its strands were already there. One of these was the charming personality of His Excellency Dr. Suchati Chuthasmit, the Thai Ambassador in India who was kind enough to accept me as his friend. From the very day of a chance meeting at one of the diplomatic receptions in New Delhi our relations became stronger and stronger till they reached a stage where one heart begins to reciprocate the warmth of the other. The other link was the Thai students in the University of Delhi who would call on me just to spend a pleasant evening. They would tell me everything about Thailand—even give me some elementary lessons in Thai! And then came the day when I found myself in Thailand. With that began my close contact with it.

Writing of poetry has been a literary pastime with me since my early years. I derive inexpressible joy out of it. So far I have written a number of Mahākāvyas and Khaṇḍakāvyas. But for one which I was specially commissioned to write, I have written them all for my own satisfaction, *svāntasukhāya*. If they were published that was because I wanted to share my satisfaction with many others who may feel like me. In line with my other works the present work has also been written for my inner satisfaction, *svāntasukhāya*. It is being published precisely for the same reason as the others were. I have endeavoured to give in its short compass as much of Thailand as I could : its beauty and charm, its present ruling dynasty, its places of historical, cultural and tourist interest and so on. I am told it is the first work in Sanskrit on Thailand. This naturally makes me happy.

Thailand and India are neighbouring countries that are bound by intimate linguistic and cultural ties that go back to hundreds of years. They share with each other many social and religious practices and other institutions. Because of this cultural community the Thai language got enriched with a large corpus of Sanskrit words. A fairly good number of Sanskrit Inscriptions, two scores and more, have been discovered from different parts of Thailand, the earliest of them going back to as early a period as the 6th Cen. A.D. As in India, so in Thailand the *Rāmāyaṇa* called the *Ramakien*, forms an inseparable part of the social fabric. Quite a few of the names of cities and towns as also those of individuals in Thailand are Sanskritic. There is so much in common between Thailand and India thus that I feel a work of this kind should have come much earlier.

Sanskrit in which the bulk of Indian literature is composed continues to be an enigma in itself. Its literature is both the oldest and the youngest. Going back to thousands of years it is as modern as any other literature in the world. Scores of works are being produced in Sanskrit every year which add to its rich store-house. Lakhs of its votaries practise it as a live medium. The present work is primarily addressed to them. With it Thailand becomes a part of the vast literature of Sanskrit, the language, adored, admired and revered.

It is not easy sometimes to fit into the texture of Sanskrit, particularly in verse, some of the typical Thai words. I have well made an attempt in this direction. How far I have succeeded in it is for the connoisseurs to see. As far as possible I have tried to follow the Thai pronunciation even of such words as can be said to have Sanskritic origin and resisted the tendency, so common among the Sanskritists of to-day to Sanskritize them, to make them look Sanskrit. Thus Chulalongkorn remains for me Chulalongkorn even in Sanskrit and does not become Cūḍālaṅkaraṇa. So does remain Ekathasarot who is not turned into Ekādaśaratha. Ramadhibodi remains as such and does not become Rāmādhipati. My idea is that the pronunciation, being an inseparable associate of the form of the words should in no case be tempered with. Otherwise to the Thai the words would just look strange, certainly not his own, with which he is not at all familiar. The only exception to the above is the name of the present King. I felt it would go very well with the flow of the verse. The Thai pronunciation of it is Pumipon Aduldej. With minor phonetic change, its Sanskrit form would be Bhūmibala Atulyatejas which I have adopted.

To relieve the monotony of the same rhythm persisting throughout I have changed the metre at places, a certain metre extending to verses giving a certain description. It is only after that description is over that a new metre has been introduced. With only minor differences in them Indravajrā, Upendravajrā and Upajāti have been treated as a group with mixed use. Altogether I have employed nine metres of which four, Indravajrā, Upendravajrā, Upajāti, Bhujaṅgaprayāta, Vasantatilaka, Anuṣṭubh and Vidyunmālā are found in Thai poetry also under the names Indrawong, Upendrawong Upachat wong, Phuchoṅkhaprayāt, Vasantatilok, Pathyāvat and Vicchummala respectively.

The brief historical account given in the poem, is based on *A History of Thailand* by Prof. Rong Syamananda which I found to be a good monograph on the subject.

To make the text easily comprehensible English and Thai translations of it are being provided herewith. The

English translation I have provided myself while the Thai translation has been provided by Her Royal Highness Mahachakri Sirindhorn, Princess of Thailand and Mr. Prapod Assavavirulhakarn of the Department of Eastern Languages of the Chulalongkorn University.

Now I come to offering thanks which are first due to Her Royal Highness Mahachakri Sirindhorn, Princess of Thailand. Her voluntary offer of translation while I was right in the midst of composing the Kāvya filled me with the incentive to bring it to completion. My thanks are also due to Mr. Prapod Assavavirulhakarn for collaborating with her in translation. Prof. Visudh Busyakul, Dr. Pranee Lapanich and Miss Tasanee Sinsakul, my colleagues in the Department of Eastern Languages of the Chulalongkorn University took keen interest while the work was in progress and provided me with the encouragement so necessary for this kind of venture. My thanks are due to them. Prof. Visudh Busyakul has contributed a learned Introduction to the work. I am grateful to him for this. Lastly my thanks are due to Prof. J.L. Shastri for reading through the proofs and to Shri Shyam Lal, Proprietor of M/S Eastern Book Linkers for undertaking the publication of the work.

Relations between nations are like tender flowers needing as they do constant care and nourishment. If the present work were to foster these a bit, I would consider my labours amply repaid.

**Satya Vrat Shastri**
Visiting Professor of Indian Studies,
Chulalongkorn University,
Bangkok.

Bangkok.
Dated : January
12.1.1979.

: १ :

अस्त्येशियानामनि सुप्रसिद्धे
द्वीपे विशालेऽतिविशालकीर्तिः ।
आग्नेय[1] दिङ्मण्डलमौलिभूतो
देशोऽतिरम्यो भुवि थाइलैण्डः ।।

: २ :

श्यामेति नामातिपुराणमस्य
ख्यातं पुराणादिषु यद्विहाय ।
थाईतिजात्यध्युषितत्वहेतो-
र्यं थाइलैण्डं कथयन्ति लोकाः ।।

: ३ :

राजा प्रजारञ्जनमादधानः
सर्वात्मना बुद्धवचःप्रमाणः ।
अतुल्यतेजःपदवीं दधानः
प्रशास्ति यं भूमिबलाभिधानः ।।

: ४ :

अकृष्टपच्यं बहु यत्र सस्यं
रम्यास्तथा शाद्वलभूमिभागाः ।
मन्दं प्रवान्तश्च यदीयवाता
आगन्तुकानां रमयन्ति चेतः ।।

---

१. आग्नेयशब्दो दक्षिणदिगर्थे रूढः । 'आखने' इति रूपेण चायमद्यापि थाइभाषायां प्रयुज्यते ।

: ५ :

पुराणमित्येव न साधु सर्वं
न चानवद्यं सकलं नवं च ।
इत्याशयेनैष गुणं कदाचित्
प्रत्नं च नूत्नं च दधाति देशः ।।

: ६ :

पाश्चात्यवेषोऽपि जनोऽत्र नूनम्
आचारमङ्गीकुरुते स्वदेश्यम् ।
धर्मे स्वकेऽस्यास्ति निसर्गसिद्धा
श्रद्धा दृढा भक्तिरनुत्तमा च ।।

: ७ :

सहस्रशः सम्प्रति भिक्षवोऽत्र
शास्त्राणि सम्यक् परिशीलयन्ति ।
आवश्यकं वस्तु जनस्तदर्थं
स्वयं ददाति स्वहिताप्तिकामः ।।

: ८ :

उच्चार्यमाणानि पदे पदेऽत्र
विहारभूमिष्वितरत्र चापि ।
वमन्ति शाक्यस्य मुनेर्वचांसि
पीयूषधारां श्रुतिशष्कुलीषु ।।

: ९ :

रामायणे दृष्टिपथं प्रयाति
रुचिर्जनानां प्रबलाऽत्र चित्रम् ।
तस्य प्रयोगा अतिकौशलेन
कर्षन्ति चेतांसि बलाज्जनानाम् ॥

: १० :

रामेति नामात्मनि सन्दधाति
राजाऽत्र रामात्प्रति राजमानः ।
श्रीरामवत्संश्रयते च वृत्तं
श्रीरामवच्चापि जनान् प्रशास्ति ॥

: ११ :

रामेति सीतेति सुदारुकेति
शोभेति शान्तेति वरेति वापि ।
नामानि रम्याणि जनो दधानो
हर्षप्रकर्षं हृदि वर्षतीह ॥

: १२ :

चतुर्मुखस्यापि च मन्दिराणि
श्रीब्रह्मदेवस्य पदे पदेऽत्र ।
एकत्र पूजा सुगतस्य भक्त्या-
ऽपरत्र च ब्रह्मण आविरस्ति ॥

: १३ :

देशस्य तस्यास्ति भृशं विशाला
कण्ठे भुवः शुभ्रतरेव माला ।
ऐश्वर्यसौन्दर्यविलासधानो
बैंकाकनाम्नी खलु राजधानी ।।

: १४ :

यदापणेषु प्रसृतानि नाना
रत्नानि चित्रद्युतिरूषितानि ।
रत्नाकराः सम्प्रति तोयशेषा
इति प्रतीतिं जनयन्ति भव्याम् ।।

: १५ :

विभूषणानां निचयांश्च रम्यान्
दृष्ट्वा सुवर्णस्य यदापणेषु ।
लोको विमुग्धो मनुते कदाचित्
स्वर्णाचलो नामत एव मेरुः ।।

: १६ :

कौशेयवासोनिचयं च यत्र
तत्रापणालिष्वलमाकलय्य ।
अहो ! कलाकौशलमित्यभन्दं
चित्रीयते यत्र जनोऽभ्युपेतः ।।

: १७ :

एकत्र यस्यां भवनेषु रम्याः
समस्तपण्यस्य निधानभूताः ।
प्रख्यापिका वैभवशालितायाः-
स्तन्वन्ति मोदं बहु पण्यवीथ्यः ॥

: १८ :

पङ्केरुहैर्नैकविधैः प्रपूर्णा
मत्स्यैः स्फुरद्भिश्च जले यथेच्छम् ।
मन्देन वातेन च वीज्यमाना
विभान्ति यस्यां खलु पुष्करिण्यः ॥

: १९ :

शान्ताकृतेः शाक्यमुनेरपूर्वां
मूर्तिं शुभां मारकतीं दधाना ।
भक्तैर्भृता सन्ततमेव सद्भि-
र्विराजते यत्र विहारभूमिः ॥

: २० :

रामायणादेव कथा अनेका
आदाय यद्भित्तिषु निर्मितानि ।
परश्शतानि प्रथितानि चित्रा-
ण्याभां विचित्रां विकिरन्ति यत्र ॥

: २१ :

पण्यस्य नौभिः क्रयविक्रयाभ्यां
कुल्यासु दूरादुपसम्भृतस्य ।
जले चरा यत्र च पण्यवीथ्यो
नेत्रद्वयासेचनकीभवन्ति ।।

: २२ :

जलाशयो यत्र विभाति यस्मिन्
सम्पुष्टिमाप्ता मकरा लसन्ति ।
याथार्थ्यतोऽयं मकरालयः सं-
स्तन्नामतो वक्तुमशक्य एव ।।

: २३ :

तच्चर्मणा संरचितानि नाना
क्रीणाति वस्तूनि जनः प्रहृष्टः ।
भस्त्रा मनोज्ञा अथ मेखलाश्च
मञ्जूषिकाश्चापि विचित्ररूपाः ।।

: २४ :

सरोसृपाणां परिपालनार्थं
यत्रास्ति केन्द्रं बहुजातिकानाम् ।
विषं विनिकृष्य यतस्तु वैद्याः
प्रयुञ्जते रोगचिकित्सिकायाम् ।।

: २५ :

प्रासाद एकोऽस्ति पुरातनोऽत्र
भव्योऽयमित्येवमुदीर्यते यः ।
आसीन्निवासोऽयमपूर्वरूपः
पुरातनानां बहुशो नृपाणाम् ॥

: २६ :

तद्वैभवं वीक्ष्य च तत्कलाया
नैपुण्यमालोक्य विमुग्धभावः ।
दिवश्च्युतं खण्डमतीव कान्तं
जनो विशालं परिशङ्कते यम् ॥

: २७ :

जपाप्रसूनोपवनाभिधानं
चकास्ति यत्रोपवनं निधानम् ।
जपाप्रसूनोपचयस्य नाना-
छवेर्ध्रुवं नेत्रयुगोत्सवस्य ॥

: २८ :

रम्यस्थलं तत्र चकास्ति थाइ-
ग्रामाभिधं यत्र विलक्षणस्य ।
सन्दर्शनं कार्यत आशु थाइ-
देशस्य साक्षाज्जनजीवनस्य ॥

: २९ :

नृत्यानि वाद्यानि च गीतिकाश्च
दीक्षा च भिक्षोरथ मुष्टियुद्धम् ।
निस्त्रिंशयुद्धं च समस्तमेतत्
सन्दर्श्यतेऽत्रानतिविस्तरेण ।।

: ३० :

कथं द्विपः कर्षति काष्ठखण्डं
नद्यां गतं दीर्घतरं बलेन ।
कथं च वा तत्क्षिपति क्षणं न
तत्रेति सन्दर्श्यत एतदत्र ।।

: ३१ :

थाय्यङ्गनानां च विभिन्नवेषा
विभिन्नकालेषु च थाइपुंसाम् ।
प्रदर्शिता अत्र विवर्धयन्ति
कुतूहलं, प्रेक्षितुमागतानाम् ।।

: ३२ :

चायो-फयाख्यां समया निविष्टा
स्रोतस्विनीं पूः सलिलौघहृद्याम् ।
तरङ्गहस्तैस्तरसा ददाति
या पाद्यमस्यै परयेव भक्त्या ।।

: ३३ :

चक्रीतिनामाऽद्यतनोऽस्ति योऽत्र
सद्राजवंशो भुवनेषु रूढः ।
संस्थापकस्तस्य विपश्चिदेतां
संस्थापयामास स राजधानीम् ॥

: ३४ :

रामेत्यभिख्यामपरां दधानः
श्रीरामभक्तः स बभूव लोके ।
स्वभाषयाऽगोयत तेन दिव्यं
रामस्य भक्त्या चरितं मनोज्ञम् ॥

: ३५ :

तद्रामकीर्त्याख्यमिहाद्वितीयं
सहस्रशः पद्यवरैर्निबद्धम् ।
अलङ्कृतं सारयुतं निपाठं
निपाठमायाति जनः प्रमोदम् ॥

: ३६ :

अनुत्तमं काव्यमिदं विशालं
रामाधिबँद्याख्यनृपस्य दीर्घम् ।
कीर्त्यस्य सत्यं धुरि सत्कवीनां
यशःपताकां विधुनोति दिक्षु ॥

: ३७ :

तस्याभवद्द्विज्ञवरस्तनूजो
रामद्वितीयापरनामधेयः ।
अवर्णयद्योपि निजैर्वचोभी
रामस्य गाथां कविकर्मधुर्यः ।।

: ३८ :

यद् व्यासतो वर्णितमास्त पित्रा
समासतस्तत्तनयोऽयमूचे ।
आश्रित्य तद्वर्णनमेव भूयः
श्रीरामकीर्तेः प्रथते प्रयोगः ।।

: ३९ :

अस्यैव वंशे विबुधाग्रगण्यः
श्रीरामषष्ठापरनामधेयः ।
फ्रा मंकुटाख्यो नृपतिर्बभूव
रामस्य गाथां निजगाद योऽपि ।।

: ४० :

वाल्मीकिरामायण एष भूयः
कृतश्रमोऽभूत् कृतिनां वरेण्यः ।
ततो गृहीतानि बहूनि तेन
रम्याणि रामस्य कथानकानि ।।

: ४१ :

रामायणस्यान्तरमप्युवाच
श्रीरामकीर्तेरतिसूक्ष्मदृष्टिः ।
प्रायुङ्क्त शब्दांश्च स यैरभूवन्
मुद्राः प्रयोगे प्रकटा अनेकाः ॥

: ४२ :

कलाभिवृद्धिं व्यतनोत्स्वदेशे
साहित्यवृद्धिं च नृपाल एषः ।
वृद्धिद्वयादेव सुवर्णकालं
तद्राज्यकालं प्रवदन्ति सन्तः ॥

: ४३ :

अमुष्य तातो विबुधाग्रचूला-
लङ्कारभूतो विशदान्तरात्मा ।
अन्वर्थनामा विललास चूला-
लङ्कौर्नसंज्ञः परमप्रतापः ॥

: ४४ :

तदाख्ययैवाकृत राजधान्यां
फा मङ्कुटोऽसौ मुकुटायमानम् ।
विद्यालयानां नृपतिर्विपश्चिद्
विद्यालयं ख्याततमं स्वदेशे ॥

: ४५ :

भूपालचक्रे खलु चक्रिवंश्ये
यत्पूर्विकैवाभवदत्र शिक्षा ।
पाश्चात्यपद्धत्यनुसारिणीति
महत्त्वमस्य प्रवदन्ति विज्ञाः ॥

: ४६ :

जातोन्नतिर्यस्य बलेन नाति-
चिरेण देशस्य दरिद्रितस्य ।
निर्माणकार्यं च बभूव भूयः
शिक्षाप्रसारश्च समेषणीयः ॥

: ४७ :

एतं नृपं कान्तविचारवन्तं
नानाविधे ज्ञानचये चरन्तम् ।
अर्वाक्तनस्य प्रदिशन्ति थाइ-
लैण्डस्य कर्तेति जनाः समेऽपि ॥

: ४८ :

तद्वंशजातो नवमोऽस्ति थाइ-
लैण्डाधिपो भूमिबलाभिधानः ।
गुणैरनेकैः प्रथितं पृथिव्यां
प्रजा मुदा यं प्रविचिन्तयन्ति ॥

: ४९ :

माधुर्यदाक्षिण्यगुणाकरोऽसौ
नक्तन्दिवं दीनजनार्तिहारी ।
लोकाभिरामो नवमोऽस्ति रामः
क्रोधस्य यत्रास्ति सदा विरामः ॥

: ५० :

सुतासु तस्यातिकुशाग्रबुद्धिः
स्वतातवल्लोकहिते प्रसक्ता ।
गीर्वाणवाणीपरिशीलनोत्का
सिरिन्धरेति प्रथिता सुताऽस्ति ॥

: ५१ :

यस्या गुणैर्बुद्धिबलेन चापि
भृशं समावर्जितमानसा याम् ।
लोकाः प्रशंसन्तितमां समेऽपि
धन्यां च लक्ष्मीमिव पूजयन्ति ॥

: ५२ :

तुष्टेन पित्रा किल देवरत्न-
पूर्वाऽर्पितो राजसुतेति तस्यै ।
सुधावदातोत्तमकीर्तिमत्यै
जनस्य हर्षं जनयन्नुपाधिः ॥

## (अनुष्टुब्वृत्तम्)

: ५३ :

उपाधेरपरोऽप्यस्ति महाचक्रीति[1] शोभनः ।
अंशोऽस्याश्चक्रिवंश्याया गुणचक्रजितो ध्रुवम् ॥

: ५४ :

पञ्चाशे जन्मदिवसे राज्ञोपाधिरयं स्वयम् ।
प्रदत्तोऽभूत्तनूजायै सुप्रसन्नेन चेतसा ॥

: ५५ :

उपलक्ष्य च तं तावद्दिवसं पुण्यमुत्सवः ।
थाइदेशे प्रवृत्तोऽभूदनेकान् दिवसाञ्शुभः ॥

: ५६ :

विद्युदालोकसहितः पताकाप्रकरान्वितः ।
तन्त्रीवाद्यसनिर्घोषो जयघोषयुतस्तथा ॥

: ५७ :

परोलक्षा जना देशे दीर्घायुष्ट्वं महीभृतः ।
प्रार्थयाञ्चक्रिरे देवं सुखं चारोग्यमेव च ॥

---

१. सम् देच् अ थेवरतन् राजसुदा (=देवरत्नराजसुता) चाओ फ्या महा-चक्री सिरिन्धर रठसीमा गुणाकरपिय जाति स्याम परमराजकुमारीति तस्याः पूर्णोपाधिसहितं नाम ।

: ५८ :

वेंकाके स्नाम् लुम्रांग्नामन्यहम्पूर्विकया जनाः ।
स्थानेऽब्धिमिव नद्यापः समेता उत्सवेरिताः ॥

: ५९ :

कदाचिदेव सम्मर्दो जनानां भवतीदृशः ।
इति तं वीक्ष्य लोकानां स्वतो वाचो विनिस्सृताः ॥

: ६० :

थाइदेश्याः प्रजानाथं मन्वते स्वमसंशयम् ।
महतीं देवतां लोके नररूपेण संस्थिताम् ॥

: ६१ :

धर्मो राष्ट्रं च राजा च चतुर्थी संस्कृतिस्तथा ।
एतच्चतुष्टयं प्राहुः थाइदेशस्य लक्षणम् ॥

: ६२ :

चायो-फयाया अपरे विभाति
तीरे स्थलं थौनबुरीति नाम ।
यदास्त पूर्वं नगरं पृथक् तद्
बैंकाकशाखापुरमद्य जातम् ॥

: ६३ :

ताक्सिन्समाख्येन निवेशितं तत्
कृतं स्वदेशस्य च राजधानी ।
वर्षाणि रम्यं दश पञ्च चापि
ललामभूतं विललास लोके ॥

: ६४ :

गायन्ति लोकाः किल गीतकानि
शौर्यस्य तास्मिन्नृपतेर्बहूनि ।
येन स्वदेशः परतन्त्रताया
उन्मोचितो बन्धनतो बलेन ।।

: ६५ :

बभूव पूर्वं खलु थौनबुर्या
बैंकाकतश्चापि पुराद्वरेण्यात् ।
वर्षाण्ययोध्यैव बहूनि यावद्
देशोत्तमस्यास्य हि राजधानी ।।

: ६६ :

तामेकदा सम्प्रतिपन्नशत्रु-
भावाः समेता विपदामिवौघाः ।
ब्रह्माभिधानान्निकटस्थदेशा-
दाक्रान्तवन्तः प्रबला जनौघाः।।

: ६७ :

विजित्य चैनां कृतवन्त आशु
भस्मावशेषां नगरीं बलात्ते ।
आक्रम्य भूयांसमथ प्रदेशं
ते थाइदेशं स्ववशे प्रचक्रुः ।।

: ६८ :

ताक्सिनसमाख्योऽभवदत्र कश्चित्
सैन्याधिपो मानधनस्तदानीम् ।
प्रियस्य देशस्य निजस्य सेहे
ऽवमाननां यो नहि देशभक्तः ॥

: ६९ :

सङ्गृह्य सैन्यादिकमाशु वीरः
स ब्रह्मदेश्यांस्तरसा विजिग्ये ।
संलक्ष्य तद्विक्रममेव लोकै-
स्ताक्सिन् महानित्यभिधीयते यः ॥

: ७० :

नष्टामयोध्यामभिलक्ष्य येन
कृता शुभा थौनबुरीति नाम्नी ।
चायो-फयाया उपयोगिताया
वशात्तदारान्नवराजधानी ॥

: ७१ :

स्वशासनस्यान्तिमकाल एष
उन्मादरोगस्य वशं जगाम ।
स्वस्यावशश्चापि चचार भूयो-
ऽन्याय्यं प्रजासूत्पथमाश्रितः सन् ॥

: ७२ :

स्वं मन्यमानश्च नवावतारं
बुद्धस्य सर्वान् स समादिदेश ।
मामर्चयध्वं ननु सर्व एव
कल्याणकामा हृदयेन यूयम् ॥

: ७३ :

यदा तु केचित्प्रतिपेदिरे तद्-
वचोऽतिनिन्द्यं नहि भिक्षुवर्याः ।
अदापयत् क्रूरमतिस्तदानीं
तेभ्यः कशाघातमसौ नृपालः ॥

: ७४ :

सर्वत्र हाहाकृतमास्त तेन
क्षोभः प्रजासु प्रससार चापि ।
तत्रैव काले समुपागतोऽभूद्
दुम्राङभिख्यो जननायकोऽत्र ॥

: ७५ :

सैन्याधिपत्येन महायशस्को-
ऽममन्त्रतासावधिकारिभिर्द्राक् ।
ते चैकमत्येन तमभ्यवोचंस्
ताक्सिन् नृपोऽयं वधमर्हतीति ॥

: ७६ :

तं निर्णयं ते समुपेत्य सर्वे
ताक्सिन्नृपं मृत्युवशं प्रणिन्युः ।
राज्यं ददुश्चापि मुदा परीता
दुम्राङभिख्याय[1] महाजनाय ॥

: ७७ :

चक्रीत्युपाधिं[2] परिलक्ष्य दत्तं
तद्वीर्यतुष्टेन पुरा नृपेण ।
ताक्सिन्समाख्येन गतः प्रसिद्धिं
तद्राजवंशस्तदभिख्ययैव ॥

: ७८ :

द्वीपार्कदिक्सम्मितहायनानि
बभावयोध्या शुभराजधानी ।
देशोत्तमस्यास्य नृपाः शशासु-
र्यत्र त्रयस्त्रिंशदुदात्तचित्ताः ॥

: ७९ :

भूतानि पञ्चेव चकाशिरेऽत्र
पञ्च प्रसिद्धा भुवि राजवंशाः ।
निवेशयामास पुरीमिमां श्री-
रामाधिबँद्याख्यनृपो मनोज्ञाम् ॥

---

१. जन्मनामास्य दुम्राङ्, तोङ् दुम्राङ् इत्येव वाऽऽसीत् । तदनु चाम्रो फ्या चक्रीत्युपाधिनायं प्रसिद्धिं गतः । राज्याभिषेकानन्तरं च रामाधिबँदी (रामाधिपतिः) त्यस्य नामाभूत् । रामप्रथम इत्यप्ययमुदीर्यंते ।

२. सम्पूर्ण उपाधिः, यथोक्तमुपरिष्टात्, चाम्रो फ्या चक्रीत्यस्ति । तत्र चक्रीत्येवांशेन महच्छब्दोपबृंहितेन राजवंशः प्रसिद्धिं गतः ॥

: ८० :

ब्रह्मीयसैन्यैः प्रविनाशितताया-
मप्यत्र पुर्यां बहवोऽवशेषाः ।
दृश्यत्वकोटिं परमां भजन्तः
कर्षन्ति लोकस्य हठान्मनांसि ॥

: ८१ :

द्विपव्रजो भाति तथाविधोऽत्र
वन्यद्विपा यत्र वशे क्रियन्ते ।
वशे कृताश्च प्रविदर्शयन्ति
प्रशिक्षिताः कौशलमात्मनिष्ठम् ॥

: ८२ :

अत्रैव मोङ्कोल बुपित्रनाम्नी
विहारभूमिः प्रतिभाति यत्र ।
बुद्धस्य कांस्यप्रतिमा विशाल-
तमा समस्मिन्नपि थाइदेशे ॥

: ८३ :

अत्रैव सूर्योथइनामिकाया-
श्चेदिश्चकास्त्यद्भुतवीरतायाः ।
प्रतीकभूता यशसाऽन्विताया
राज्ञ्याः कृता तत्पतिना प्रियेण ॥

: ८४ :

राज्ञी किलैषा पतिमन्वचारीत्
सङ्ग्रामभूमौ सह तेन चासीत् ।
तत्रापदं घोरतरामुपेत-
मत्रास्त तं प्राणपणेन चापि ॥

: ८५ :

पुंवेषधृत्सा युयुधे बलेन
रिपोर्भटैर्भर्तृहिताय वीरा ।
तत्रैव युद्धे प्रहृता च गाढं
सा वीरलोकोचितमाप लोकम् ॥

: ८६ :

तद्भूस्म संस्थापितमत्र चेद्यां
तच्छोकतप्तेन तदीयभर्त्रा ।
आगन्तुका यां प्रविलक्ष्य सत्यं
म्लानानना दुःखभराद् भवन्ति ॥

: ८७ :

अत्रैव वत्-फू-खओ-थोंगनामा
स्तूपोऽस्ति शालद्रुमतुङ्गरूपः ।
विनिर्ममे यं बुरिङोङनामा
ब्रह्माख्यदेशाधिपतिर्नृपालः ॥

: ८८ :

जयं निजं यो ह्यभिलक्ष्य थाइ-

देश जयस्तम्भमिवाचखान ।

शैल्या स्वदेशस्य, ततश्च पश्चात्

नरेसुअन्नामकभूमिपालः ॥

: ८९ :

स्वदेशशैल्या प्रतिसंस्कृतं तं

व्यधान्महानित्यभिधीयमानः ।

गुणैरनेकैर्नयविक्रमाद्यै-

र्विद्वानयोध्यानृपमौलिभूतः ॥

: ९० :

प्रासाद एकोऽस्ति पुरातनोऽत्र

रामाधिबँद्याख्यनृपेण क्लृप्तः ।

नाम्ना यमाहुः प्रथमेन वेद्या

युतं त्रिमुख्या खलु राजकीयम् ॥

: ९१ :

पुरोऽस्त्यथो चन्द्रकसेमनामा

प्रासादवर्योऽत्र विनिर्ममे यम् ।

नरेसुअन् स्वस्य हि यौवराज्य-

काले महानित्यभिधीयमान ॥

(भुजङ्गप्रयातवृत्तम्)

: ६२ :

अयोध्यापुरी नातिदूरे विभाति
सुरम्यं स्थलं बाङ्-प-इन्-नाम यत्र ।
कथां कस्यचिद् भूपतेः कौतुकेन
मनोज्ञां जनाः सङ्गता उद्गिरन्ति ॥

: ६३ :

स एकाथसेत्यंशमादौ स्वनाम्नि
दधानश्च रोदित्ययांशं[1] परस्तात् ।
सदाचारवृत्त्या प्रजाः स्वाः शशास
यशश्चापि लोकेऽवदातं ततान ॥

: ६४ :

नृपः प्रस्थितोऽसौ स्वनावा कदाचित्
स्थलं वानलानेत्यभिख्यं दिदृक्षुः ।
तटिन्या जलौघेषु चायो-फयाया
विपत्तिं विपाकाद्विधेरासाद ॥

: ६५ :

स भग्नां विमुच्य स्वकां नावमाशु
भुजाभ्यां तरन् तत्स्थलं प्राप धीरः ।
निशायामभूत्सङ्गतस्तत्र चापि
कयाचित् स्त्रिया चन्द्रमुख्या नृपालः ॥

---

१. एकाथसरोत् इति तस्य नामासीत् । संस्कृतभाषायामेकादशरथ इति शब्दः । तस्यैव थाइभाषायामेकाथसरोत् इत्युच्चारणम् ।

: ९६ :

हृतोऽस्या अनिन्द्येन रूपेण चापि
स्त्रिया रूपवत्याः स इन्नामिकायाः ।
प्रभुर्नो बभूवात्मनः सत्प्रजानां
प्रभुर्हन्त ! चित्रो विलासो विधातुः ।।

: ९७ :

स तां रात्रिमेतां स्वदारांश् चकार
कणेहत्य रेमे तया चापि सार्धम् ।
निवृत्तः सुखं च स्वकां राजधानीं
स्वकृत्येषु भूयो मनः स्वं बबन्ध ।।

: ९८ :

स्त्रियां चापि तस्यां सुतं प्राप, नैतद्
रहस्यं च कस्मिश्चिदाविश्चकार ।
प्रसात्थोङभिख्यं पुपोषापि चैनं
समारोपयामास सिंहासनं च ।।

: ९९ :

प्रसात्थोङ् स्थले बाङ्-प-इन् नामधेये
विनिर्मापयामास वेश्म स्वकीयम् ।
अनेकानि चान्यानि वेश्मानि चारू-
ण्यसौ कारयामास कार्येषु दक्षः ।।

(वसन्ततिलकवृत्तम्)

: १०० :

स्थानानि सन्ति रमणीयतमान्यनेका-
न्यन्यान्यपीह नयनद्वयतर्पणानि ।
तेष्वेकमस्ति पुलिनं जलधेर्विशालं
ख्यातिं परामुपगतं भुवि पत्तयेति ॥

: १०१ :

यद् द्रष्टुमापतति सर्वत एव लोको
यद्रामणीयककथाश्रुतिसम्प्रगुन्नः ।
यत्सैकते विलुठितुं च मुदाभिलष्य-
त्यन्यच्च सर्वमपि विस्मरति प्रसन्नः ॥

: १०२ :

वारांनिधौ प्रमुदितः प्रसभं प्रविष्टो
यद्वारिराशिमवगाहितुमीहते वा ।
तोरे स्थितः पिबति वाऽम्बुनिधेश्चिराय
नेत्रद्वयेन सुषमामतिविस्तृतस्य ॥

: १०३ :

एवं सुखेन समयं व्यतियाप्य तत्र
द्वीपं समापतति कोरलनामधेयम् ।
तत्प्राप्य दर्पणगतप्रतिबिम्बकाब्धि-
जीवान् स पश्यति च विस्मयमभ्युपेतः ॥

: १०४ :

फूकेट्समाख्यमपरं पुलिनं विशालं
वारांनिधेर्लसति नेत्रसुखं ददानम् ।
तद् द्रष्टुमप्युपगताः कुतुकाज्जनौघाः
तत्रालुठन्ति जलधिं च निभालयन्ति ॥

(द्रुतविलम्बितवृत्तम्)

: १०५ :

स्थलमतीव मनोहरमन्यतः
पतति सन्दृशि चांग्मइनामकम् ।
तदिदमुत्तरथाइभुवो मणिं
सुविमलं प्रवदन्ति मनीषिणः ॥

: १०६ :

परिगतं गिरिमेखलया तथा
निबिडपादपराजिविराजितम् ।
सुखदमन्दसमीरसमीरितं
जनमनो हरतीदमहो ! हठात् ॥

: १०७ :

इह विभाति गिरेः शिखरे स्थितं
नृपतिसद्म हि फूपिङ्नामकम् ।
उपवनेन वरेण सनाथितं
सुमसुगन्धसुवासितदिक्तटम् ॥

(आर्यावृत्तम्)

: १०८ :

आस्ते विश्रुतमत्र
तत्स्थानं बहूनि यत्रच्छत्राणि ।
नानावर्णैस्तनुते
हृद्यानि कर्मकृत् कुशलः ॥

: १०९ :

कौशेयेषु पटेषु
कार्पासेषु वा कर्गलादिवन्मृदुषु ।
विशिष्टवृक्षत्वचा
रचितेषु ददाति रुच्यवर्णान् सः ॥

: ११० :

छत्राणामेव कृते-
र्नियतं तत्र स्थले बहूनां हि ।
छत्रग्रामोऽयमिति
ख्यातिर्जाता स्थलस्य तस्याद्य ॥

: १११ :

च्यांगमय्यां सन्ति विहारा
नाना दृश्यत्वकोटिमापतिताः ।
तेषु विशेषोल्लेखम्
अर्हति दौय्-सुथेप् विहारोऽत्र ॥

: ११२ :

विनिविष्टो गिरिशृङ्गे
ऽभिगमनीयः सोपानेनातिदीर्घेण ।
काञ्चनरचितपगोडो
राराज्यते विहारवर्योऽयम् ॥

: ११३ :

परित इमं रचितानि
बौद्धाख्यानोपजीव्यानि ।
नानावर्णैर्भित्तिषु
चेतश्चित्राणि कर्षन्ति ॥

: ११४ :

व्यालद्वयप्रस्तरमूर्ती
इह सोपानमुखे समारचिते ।
सोपानमुखे व्यालयोर्मुखे
पुच्छं तु तयोर्गिरिशृङ्गं यावदारचितम्

(विद्युन्मालावृत्तम्)

: ११५ :

थाइस्त्रीणां सम्प्रख्यातं
रूपं पृथ्व्यां सर्वत्रैव ।
तन्वङ्ग्यस्ता गौराकाराः
शोभा तासां चित्रैवास्ति ॥

: ११६ :

चांगमथ्यां ताः कामिन्यस्तु
भूयो रूपं चित्ताकर्षि ।
आबिभ्रत्यो नेत्रद्वन्द्व-
तृप्तिं तन्वन्त्यायातानाम् ॥

(उपसंहारः)

(अनुष्टुब्वृत्तम्)

: ११७ :

थाइदेशविलासाख्यं स्वान्तःप्रेरणया कृतम् ॥
थाइदेशमुपेतेन मया काव्यं समासतः ॥

: ११८ :

"तत्सन्तो द्रष्टुमर्हन्ति सदसद्व्यक्तिहेतवः ।
हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकाऽपि वा ॥

: ११९ :

इदं चेज्जनयेत्तोषं सुधियां कल्यचेतसाम् ।
धन्यं स्वं कलयेयाहं सुधीतोषो हि दुर्लभः ।

: १२० :

एधेत कलया चापि थाइभारतदेशयोः ।
यदि सौहार्दमेनेन यत्नो मे स्याद् फलेग्रहिः ॥

: १२१ :

काव्यं समाप्तिमायाति शिवस्यानुग्रहादिदम् ।
स एव कुर्यात्सर्वेषां शिवतातिः शिवः शिवम् ।।

।। इति डा० सत्यव्रतशास्त्रिणः कृतिषु
थाइदेशविलासाख्यं काव्यं पूर्तिमगात् ।
शुभं भूयादध्यापकानामध्यायकानां च ।।

।। ॐ स्वस्ति ।।

# ไทยเทศวิลาส

....

---


สัตยพรต ศาสตรี

ศาสตราจารย์พิเศษ

แผนกวิชาภาษาตะวันออก

คณะอักษรศาสตร์ จุฬาลงกรณมหาวิทยาลัย

ประพันธ์



สมเด็จพระเทพรัตนราชสุดาฯ สยามบรมราชกุมารี

ทรงพระราชนิพนธ์แปล

ร่วมกับ

นายประพจน์ อัศววิรุฬหการ

